॥ शरणागति गद्यम् ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ शरणागति गद्यम् ॥

॥ श्रीमते रामानुजाय नमः ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये ॥

वन्दे वेदान्तकर्पूरचामीकरकरण्डकम्
रामानुजार्यमार्याणां चूडामणिमहर्निशम् ॥

श्रीरङ्गनायिकारामानुजसंवादः ॥

श्रीरामानुजः

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभव
ऐश्वर्यशीलाद्यनवधिकातिशय असङ्ख्येयकल्याणगुणगणां पद्मवनालयां
भगवतीं श्रियं देवीं नित्यानपायिनीं निरवद्यां देवदेवदिव्यमहिषीं
अखिलजगन्मातरमस्मन्मातरमशरण्यशरण्यामनन्यशरणः
शरणमहं प्रपद्ये ॥

पारमार्थिक भगवच्चरणारविन्दयुगळ
ऐकान्तिकात्यन्तिक परभक्ति परज्ञान
परमभक्तिकृत परिपूर्णानवरत नित्यविशदतम अनन्यप्रयोजन
अनवधिकातिशयप्रिय भगवदनुभवजनित अनवधिकातिशय प्रीतिकारित
अशेषावस्थोचित अशेषशेषतैकरतिरूप नित्यकैङ्कर्यप्राप्त्यपेक्षया
पारमार्थिकी भगवच्चरणारविन्दशरणागतिः
यथावस्थिता अविरताऽस्तु मे ॥

श्रीरङ्गनायिका

अस्तु ते । तयैव सर्वं सम्पत्स्यते ॥

॥ श्रीरङ्गनाथरामानुजसंवादः ॥

श्रीरामानुजः

अखिलहेयप्रत्यनीककल्याणैकतान ! स्वेतरसमस्तवस्तुविलक्षण
अनन्तज्ञानानन्दैकस्वरूप ! स्वाभिमतानुरूप एकरूप अचिन्त्य दिव्याद्भुत
नित्यनिरवद्य निरतिशय औज्ज्वल्य सौन्दर्य सौगन्ध्य सौकुमार्य लावण्य
यौवनाद्यनन्तगुणनिधिदिव्यरूप !

स्वाभाविकानवधिकातिशय ज्ञानबलैश्वर्य वीर्यशक्तितेजस्सौशील्य
वात्सल्य मार्दव आर्जव सौहार्द साम्य कारुण्य माधुर्य गाम्भीर्य औदार्य
चातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसङ्कल्पकृतित्व
कृतज्ञताद्यसङ्ख्येयकल्याणगुणगणौघमहार्णव !

स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्ध
निरतिशयसुखस्पर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंस
मकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धन
पीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषण !

स्वानुरूप अचिन्त्यशक्तिशङ्खचक्रगदासिशार्ङ्गाद्यसङ्ख्येयनित्यनिरवद्य
निरतिशयकल्याणदिव्यायुध !

स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्य
शीलाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणश्रीवल्लभ !
एवम्भूतभूमिनीळानायक !

स्वच्छन्दानुवर्तिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूप
नित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तकल्याणगुणगण
शेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरित
चरणयुगळ !

परमयोगिवाङ्मनसाऽपरिच्छेद्यस्वरूपस्वभावस्वाभिमत
विविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्या-
नन्तमहाविभवानन्तपरिमाणनित्यनिरवद्यनिरतिशयश्रीवैकुण्ठनाथ !

स्वसङ्कल्पानुविधायि स्वरूपस्थितिप्रवृत्ति
स्वशेषतैकस्वभाव प्रकृति पुरुष
कालात्मक विविध विचित्रानन्त भोग्य भोक्तृवर्ग भोगोपकरण

भोगस्थानरूप निखिलजगदुदय विभव लयलील !

सत्यकाम! सत्यसङ्कल्प ! परब्रह्मभूत ! पुरुषोत्तम महाविभूते !
श्रीमन्!  नारायण! वैकुण्ठनाथ !

अपारकारुण्य सौशील्य वात्सल्य औदार्य ऐश्वर्य सौन्दर्य महोदधे !
अनालोचितविशेष अशेषलोकशरण्य ! प्रणतार्तिहर !
आश्रितवात्सल्यैकजलधे! अनवरतविदित निखिलभूतजातयाथात्म्य!
अशेषचराचरभूत निखिलनियमननिरत! अशेषचिदचिद्वस्तुशेषिभूत!
निखिलजगदाधार! अखिलजगत्स्वामिन्! अस्मत्स्वामिन्! सत्यकाम!
सत्यसङ्कल्प! सकलेतरविलक्षण! अर्थिकल्पक! आपत्सख! श्रीमन्!
नारायण! अशरण्यशरण्य! अनन्यशरणः
त्वत्पादारविन्दयुगळं  शरणमहं प्रपद्ये ॥

अत्र द्वय(मनुसन्देय)म् ।

``पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून् ।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥

सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान् ।
लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो! ॥ "

``त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥

पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ! ॥ "

``तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ "

मनोवाक्कायैरनादिकालप्रवृत्त अनन्त अकृत्यकरण
कृत्याकरण भगवदपचार
भागवतापचार असह्यापचाररूप नानाविध अनन्तापचारान्
आरब्धकार्यान्, अनारब्धकार्यान्, कृतान्, क्रियमाणान्, करिष्यमाणांश्च
सर्वान् अशेषतः क्षमस्व ।

अनादिकालप्रवृत्तविपरीतज्ञानं,  आत्मविषयं कृत्स्नजगद्विषयं च,

विपरीतवृत्तं च अशेषविषयं,
अद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥

मदीयानादिकर्मप्रवाहप्रवृत्तां, भगवत्स्वरूपतिरोधानकरीं,
विपरीतज्ञानजननीं, स्वविषयायाश्च भोग्यबुद्धेर्जननीं,
देहेन्द्रियत्वेन ??
भोग्यत्वेन सूक्ष्मरूपेण च अवस्थितां, दैवीं गुणमयीं मायां,
``दासभूतः शरणागतोऽस्मि तवास्मि दासः, "
इति वक्तारं मां तारय ।

``तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥"

इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व ।

``पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ",
``भक्त्या त्वनन्यया शक्यः", ``मद्भक्तिं लभते पराम्"

इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व ।

परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरुष्व ।

परभक्ति परज्ञान परमभक्तिकृत परिपूर्णानवरत नित्यविशदतम
अनन्यप्रयोजन अनवधिकातिशयप्रिय भगवदनुभवोऽहं, तथाविध
भगवदनुभवजनित अनवधिकातिशय प्रीतिकारित अशेषावस्थोचित
अशेषशेषतैकरतिरूप नित्यकिङ्करो भवानि ।

श्रीरङ्गनाथः
एवम्भूत मत्कैङ्कर्यप्राप्त्युपायतया अवक्लृप्तसमस्तवस्तुविहीनोऽपि,
अनन्त तद्विरोधिपापाक्रान्तोऽपि, अनन्त मदपचारयुक्तोऽपि,
अनन्त मदीयापचारयुक्तोऽपि, अनन्त असह्यापचारयुक्तोऽपि,
एतत्कार्यकारणभूत अनादि विपरीताहङ्कार विमूढात्मस्वभावोऽपि,

एतदुभयकार्यकारणभूत अनादि विपरीतवासनासम्बद्धोऽपि,
एतदनुगुण प्रकृतिविशेषसम्बद्धोऽपि,
एतन्मूल आध्यात्मिक आधिभौतिक आधिदैविक सुखदुःख तद्धेतु
तदितरोपेक्षणीय विषयानुभव ज्ञानसङ्कोचरूप मच्चरणारविन्दयुगळ
एकान्तिकात्यन्तिक परभक्ति परज्ञान परमभक्तिविघ्नप्रतिहतोऽपि,
येनकेनापि प्रकारेण द्वयवक्ता त्वम्,
केवलं मदीययैव दयया, निश्शेषविनष्ट
सहेतुक मच्चरणारविन्दयुगळ एकान्तिकात्यन्तिक परभक्ति परज्ञान
परमभक्तिविघ्नः, मत्प्रसादलब्ध मच्चरणारविन्दयुगळ एकान्तिकात्यन्तिक
परभक्ति परज्ञान परमभक्तिः, मत्प्रसादादेव साक्षात्कृत यथावस्थित
मत्स्वरूपरूपगुणविभूति लीलोपकरणविस्तारः, अपरोक्षसिद्ध मन्नियाम्यता
मद्दास्यैकरसात्मस्वभावात्मस्वरूपः, मदेकानुभवः, मद्दास्यैकप्रियः,
परिपूर्णानवरत नित्यविशदतम अनन्यप्रयोजन अनवधिकातिशयप्रिय
मदनुभवस्त्वं तथाविध मदनुभवजनित अनवधिकातिशय प्रीतिकारित
अशेषावस्थोचित अशेषशेषतैकरतिरूप नित्यकिङ्करो भव ।

एवम्भूतोऽसि ।

आध्यात्मिक आधिभौतिक आधिदैविक दुःखविघ्नगन्धरहितस्त्वं
द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातं
अत्रैव श्रीरङ्गे सुखमास्व ॥

शरीरपातसमये तु केवलं मदीययैव दयया अतिप्रबुद्धः, मामेवावलोकयन्,
अप्रच्युत पूर्वसंस्कारमनोरथः, जीर्णमिव वस्त्रं सुखेन इमां प्रकृतिं
स्थूलसूक्ष्मरूपां विसृज्य, तदानीमेव मत्प्रसादलब्ध मच्चरणारविन्दयुगळ
एकान्तिकात्यन्तिक परभक्ति परज्ञान परमभक्तिकृत परिपूर्णानवरत नित्य
विशदतम अनन्यप्रयोजन अनवधिकातिशयप्रिय मदनुभवस्त्वं तथाविध
मदनुभवजनित अनवधिकातिशय प्रीतिकारित अशेषावस्थोचित
अशेषशेषतैकरतिरूप नित्यकिङ्करो भविष्यसि ॥

मा तेऽभूदत्र संशयः ।
``अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।"
``रामो द्विर्नाभिभाषते ।"
``सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥"
``सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥"
इति मयैव ह्युक्तम् ।

अतस्त्वं तव तत्त्वतो मद्ज्ञानदर्शनप्राप्तिषु निःसंशयः सुखमास्व ॥

अन्त्यकाले स्मृतिर्यातु तव कैङ्कर्यकारिता ।
तामेनां भगवन्नद्य क्रियामाणां कुरुष्व मे ॥

इति श्री भगवद्रामानुजविरचिते गद्यत्रयप्रबन्धे शरणागति गद्यम् ॥

सर्वं श्रीकृष्णार्पणमस्तु